# संस्कृत-वार्ताः

दिनाङ्कः 17-12-2020

प्रातः - **06: 55**

<u>मुख्य-वार्ताः</u>

- भारतं-बाड्ग्लादेशं च अन्तरा अद्य शिखर-सम्मेलनपरं समुपवेशनं समुनुष्ठास्यते। प्रधानमन्त्री नरेन्द्रमोदी बांग्लादेशीय प्रधानमन्त्री शेख हसीना च दृश्य-श्रव्य परान्तर्जालीय माध्ययेन विधास्यन्त: शिखरोपवेशनम्।
- केन्द्रीय मन्त्रिमण्डलस्य आर्थिक समित्या पूर्वोत्तर क्षेत्रीय विकासाय, इक्षुदण्ड-कृषकेभ्यश्च सार्धत्रिंशत् कोटिरूप्यकाणां साहाप्यराशि: अनुमत:।
- भारतेन आत्मनिर्भराभियानं सबलीकर्तुं नव-विकास-बैंक इत्यनेन साकं एकार्बुद- डॉलरात्मक: ऋणप्रस्ताव: हस्तक्षरै: प्रमाणित:।
- गतशताब्दस्य एकसप्ततितमे वर्षे पाकिस्तानं समाश्रित्य अधिगत-विजयमालक्ष्य अशेषे हि देशे समामानित: ह्य: विजय दिवस:।
- कोविड-19 इति वैश्विक संक्रमणदृशा भारतं सुदृढां स्थितिं भजते। भारते अनारतं प्रत्यावाप्तमितौ परिष्कार: समभिवर्ध्य प्रतिशतं द्वे एकं दशमलवोन्तर पञ्चनवतिमित: जाजायत।

<u>भारत-बांग्लादेश बैठक</u>

प्रधानमन्त्रिणं नरेन्द्रमोदिनं तदीय बांग्लादेशीय-समकक्षीयं शेखहसीना इत्येनां च अन्तरा अद्य दृश्य-श्रव्य-परान्तर्जालीयं शिखर सम्मेलनं समनुष्ठास्यते। उभाभ्यामपि नेतृभ्यां द्विपक्षीय-सम्बन्धान् समाश्रित्य व्यापकचर्चा: विधास्यन्ते। यास्मिन् कोविड नाइन्टीन् इति वैश्विक संक्रमण-कालेऽपि सहयोगं अतोऽपि सबलीकर्तुं वर्तते अन्यतमम्। अवधेयास्पदं तथ्यमिदं यत् भारत-बाड़्ग्लादेशाभ्यां आदान-प्रदानं उन्नत-स्तरे यथावस्यमेव प्रवर्तितम् अस्ति इति। बाड्ग्लादेशीयया प्रधानमन्त्रिपदासीनया शेखहसीना वर्यया विगते वर्षे अक्टूबर-मासे स्वीया आधिकारिकी भारत यात्रा सम्पादिता आसीत्। अपरत: प्रधानमन्त्रिणा श्रीनरेन्द्रमोदिना अस्मिन् वर्षे मार्च-मासे मुजीब-बोरेशो इत्यस्य ऐतिहासिकावसरे एक: दृश्यश्रव्यसन्देशोऽपि प्रख्यापित: आसीत्। ध्येयमस्ति यत् कोविड-19 इति वैश्विक संक्रमणकालेऽपि एतन्नेतृद्वयो-मर्ध्ये अनवरतं सम्पकोऽभवत् इति।

कैबिनेट

केन्द्रीयमन्त्रिमण्डलस्य आर्थिक समित्या षड राजेभ्यं: ह्य: राज्येषु अन्तर्वति हस्तान्तरण-वितरण-प्रणाल्यान्तर्गतं एतत् सुदृढ़ीकरण-धिया उत्तरपूर्वीय विद्युत-प्रणाली-परिष्कार योजनान्तर्गतं अनुमानित: राशि: अनुमोदिता। केन्द्रीय सूचना प्रसारण मन्त्रिणा प्रकाश जावडेकरेण स्पष्टीकृतं यत् निर्णयोऽयं पूर्वोत्तर क्षेत्रीय विकासाय प्रशासनस्य प्रतिबद्धतां प्रमाणयति इति।

केन्द्रीय मन्त्रिमण्डलस्य आर्थिक समित्या इक्षुदण्ड-सम्बद्धेभ्य: कृषकेभ्य: सार्धत्रिंशत् कोटिरूप्यकाणां राशि: अनुमत:। नवदिल्ल्यां वार्ताहर-सम्मेलनं सम्बोधयता सूचना प्रसारण मन्त्रिणा प्रकाश-जावडेकरवर्येण इदं संसूचितं।

अपरत: प्रशासनेन भारतस्य केन्द्रीय विद्युत् नियामक आयोगं अमेरिकादेशीयं च अन्तरा सहमति ज्ञापनपत्रमपि हस्ताक्षरै: प्रमाणीकृतम्।

आत्मनिर्भर भारत

भारतेन आत्मनिर्भर-भारताभियानाय नव-विकास-बैंक-इत्यनेन साकं एकार्बुद-डॉलरात्मकं ऋणपत्रं हस्ताक्षरै प्रमाणीकृतम्। भारत-प्रशासनं अभिनव-विकास-बैंकश्च ह्य: मनरेगा योजनया आत्मनिर्भर भारताभियानं संवर्धयितुं एकार्बुद डालरात्मकराशे: सहमतिपत्रं हस्ताक्षरितवन्तौ। अनेन हि कोविड नाइन्टीन इति वैश्विक संक्रमण प्रकोप: न्यूनीकर्तुं, प्राकृतिक संसाधन प्रबन्धन द्वारा ग्रामीण क्षेत्रे आर्थिक स्यितिश्च सबलीभविष्यति इत्याकल्यते।

कोविड

कोविड-19 इति वैश्विक संक्रमणदृशा भारतं सुदृढांस्थितिं भजते। भारते अनारतं प्रत्यावाप्तमितौ परिष्कार: समभिवर्ध्य प्रतिशतं द्वे एकं दशमलवोन्तर पञ्चनवतिमत: जाजायत। विगते अहोरात्रे प्राय: चतुस्त्रिंशत् जना: स्वस्थीभूता:। अधुना देशे सार्ध चतुर्नवति लक्षतोऽयधिका: जना आरोग्य प्राप्य सकुशलं गृहं उपेता: सूच्यन्ते।

।। इति वार्ताः ।।